श्रीशिवाय गुरवे नमः        शृंगगिरिः
4. 2. 80

पूज्यपादेषु महामहिम संपन्नेषु
भगवद्रूपेषु श्रीमदमृतवाग्भवाचार्य-
वर्येषु परश्शतप्रणामपूर्वकं विज्ञापयति
गोपालकृष्णमूर्ति शास्त्री (आन्ध्रदेशीयः)

श्रीमताम् अनुग्रहेण वयं सर्वे सकुटुम्बं
कुशलिनः ज्येष्ठमासे शृंगगिरिं
समागतोऽस्मि. आन्ध्रदेशे स्वग्रामे
समीपे * यत्र विवाहादिकं समाप्य
अत्र आगतोऽस्मि. श्रीजगद्गुरवोऽपि
रामेश्वरयात्रां समाप्य ज्येष्ठ-
मासे शृंगगिरिं समागताः.

व्यासपूजा (आषाढपूर्णिमा) काले
श्रीमन्तः हे हळ्ळी स्थानम् आगमिष्यन्ति
इत्याशाभ्रमेण एतावत्कालं पत्रलेखने
विलम्बो जातः क्षन्तव्यः.

श्रीजगद्गुरुसन्निध्ये प्रातःकाले
ब्रह्मसूत्रभाष्ये तृतीयाध्याये
पाठः प्रचलति. मध्याह्ने न्याय-
शास्त्रे विचारः प्रचलति.

मत्पुत्रः विना उद्योगं, परीक्षा
मद्वा गृहे आगतः तदीय परिस्थित्या
मनःक्लेशः - वर्षाधिक्यात् क्लेशः
अन्यच्च मनोज्ञा कुल स्थानानि
वृष्टि आपतन्ति. स्वदेशे भूसंबं-
धिशासनेन नूतनया भूविषये
विवादादिना मानसिकचिंता वर्धते.
ईदृश परिस्थितौ यथाशक्ति भगवदनु-
संधानं करोमि. तृप्तिर्नास्ति.

यथावत् भवदुपदिष्ट भगवत्तत्त्व-
प्रवेशोपाये निर्विघ्नं प्रवेशस्यास्त-
भूयादिति श्रीचरणान् प्रार्थये.

सीताराम तवरजी महोदयस्य
सनमस्काराः

भवदीय पुत्रिका जामातृ
दौहित्रादिभिः सर्वे श्रेयः मुदिताः?
आशिषः तेषां सौहार्दं सर्वदा
स्मरामि.

यथावकाशं आशीः प्रेषयन्तु
भवदुपदिष्टमार्गे प्रवेशः स्थिरतां च
आनन्दाविर्भावपूर्वं यथास्यात्
तथा अनुगृह्णन्तु इति प्रार्थये.

इति सप्रणामं
गोपालकृष्णमूर्तिशास्त्री

C/o Private Secretary of Sri Mutt
Saradapeetham.
Sringeri - Kadur.
Karnataka State

पहला मोड़ FIRST FOLD

पहले यहाँ खोलिए TO OPEN

अन्तर्देशीय पत्र कार्ड
INLAND LETTER CARD







To,
Sri Amrita Vagbhava
Acharyajee.
C/o Sita Rama Tanwar
B-66 Nanakpura
(South Moti Bagh)
New-Delhi

पिन PIN 110021

दूसरा मोड़ SECOND FOLD

तीसरा मोड़ THIRD FOLD

इस पत्र के भीतर कुछ न रखिए NO ENCLOSURES ALLOWED

प्रेषक का नाम और पता :— SENDER'S NAME AND ADDRESS :—

गोपालकृष्णमूर्ति शास्त्री.
शृंगेरि: कर्नाटकराज्य.

4/2/80

पिन PIN

| ಜ್ವರ! ಮಲೇರಿಯಾ ಇರಬಹುದು ಕ್ಲೋರೊಕ್ವಿನ್ ಮಾತ್ರೆಗಳನ್ನು ಸೇವಿಸಿರಿ | | | | | | |
|---|---|---|---|---|---|---|
| (ಖಾಲಿ ಹೊಟ್ಟೆಯಲ್ಲಿ ನುಂಗಬಾರದು) | ವಯಸ್ಸು | 0-1 | 1-4 | 4-8 | 8-14 | 14+ |
| | ಮಾತ್ರೆ | 1/2 | 1 | 2 | 3 | 4 |

श्रीनगरतः 27-12-71

श्रीमतां परमशिवरसास्वादक्षीबाणां महामान-
नीयानां त्रिभुवनोपकरणीकृतकायानां त्रिकप्र-
स्नावगाहनैः विशदीकृतान्तःकरणानां योगि-
प्रवराणां परमपूज्यानां देशिकमहोदयानां चरणानु-
रणेषु स्वान्तेवासिनः प्रणामाञ्जलयः समुल्लसन्तु ।

प्रणतिततीनामनन्तरमिदमावेद्यते यत्स्वे-
मत्के पत्रं श्यामलप्रदप्रसादा[redacted] समर्पयन्,
वृतज्ञावगतम्। एतर्हि दुष्कर्मजन्मा देवप्र-
कोपो नितरां समेधते। पाकस्थानीयानि
बमवर्षकाणि विमानानि द्विकृत्वोऽह्नि रात्रौ
च चोल्कागोलकानि प्रक्षिपन्ति स्म।
येनात्रत्या जनता नितरां त्रस्यति स्म,
साध्वसेन च वेपते स्म। केवलं श्रीमतां भक्त-
सतामनुग्रहमन्तरा न किमप्यालम्बन
कारि ।

एतर्हि
श्रीमतां मतामाविर्भाव एव भीतभीता-
जनताः समाश्वसितुं त्रातुञ्च प्रभवति।
अनुश्रूयते च छम्बसिक्टरे स्थिता भारतीया-
सेना ईषदूना रिपुगौरवमहमानैव लक्ष्यते।
पञ्चषष्टितमे हायनेऽपि प्रदेशेऽस्मिन्नेव
भारतीया चमूः हतोत्साहा दृश्यत।
केवलं श्रीमतामनुग्रहद्वेगवाश्वासनजनि-
का [redacted] अत्रत्या यवनाः शत्रुविमानानि
दर्शं दर्शं नितरां प्रसीदन्ति स्म। स्वसद्मना-
महालिकासु वेगेनारोहं २ मोमुद्यन्ते स्म।
येषामेकतमेन गृहवलभीमारुह्य विद्यु-
ल्लता संदर्शनेन यमसदनातिथित्वमवापि-
स्वप्रातिवेशिमकानां कतिपयैः गृहपटलैः
सार्धमेव। पुष्प० पुष्पमहोदयास्तु यथा-
पूर्वमेव प्रन्नपुस्तकानां मुद्रणप्रकाशना-
दिकर्मणि नितरामुदासते।

किञ्च राष्ट्रलोकस्य सञ्जीवनीभाष्यं द्रष्टुं
समुत्कण्ठेत (मामकीनं) चेतः कामयेत
च श्रीमद्दर्शनामन्दानन्दास्पदोऽहम्।
लिखितेष्वपि बहुषु पत्रेषु जयपुरतः
न किमपि प्रत्युत्तरादिकमधिगतं,-
यत्तु केवलं श्रीमतां गतिविधिं ज्ञातुमेव
मुख्योऽभिसन्धिः। [illegible] धार्यं यत्
समये समये स्मर्यमाणोऽयं श्रीमद्भिरनु-
गृह्येत। काश्मीरे प्वरिष्ठादि दुर्ग्रहाणां
प्रभाव उत्तरोत्तरं वर्धमानः परिदृश्यते।
श्रीमतामेवानुग्रहदृग् यं शमयितुं
प्रभवति -
इति भवदनुग्रहं कामय-
माना यक्षाभिजनः दीना-
नाथः प्रार्थयते।

किञ्च हुसैनीवाला सिवरेऽभारतवाहिनी प्रष्टगामिनी संवृतेति श्रूयते




अन्तर्देशीय पत्र कार्ड
INLAND LETTER CARD

T. DUE
10 PAISA.

Shri
To ~~Shri His Holiness~~ ✻ Dvarikanath Pandit Acarya Amrta
Vāgbhavaji c/o ✻ Dvarikanath
Pandit Actt State Bank
Quarter No F/167/3 Rajouri
Garden New Delhi 27 P.O New Delhi

पहला मोड़ First fold

तीसरा मोड़ Third fold

27/12/71

प्रेषक का नाम और पता :— Sender's name and address :—

If not delivered to proper addressee then
may be returned to Dina Nath Yachh c/o
Near Police Station Rajbag
Upper Javahernagar
Srinagar Kashmir




इस पत्र के भीतर कुछ न रखिए NO ENCLOSURES ALLOWED

मुद्राः २२-९-६२

श्रीनगर २२-९-६२

श्रीमन्तो विविधविद्यावगाहनीकृतमानसाः परमपूज्याः श्रीदेशिकप्रवराः साञ्जलिबन्धमावेद्यन्ते यच्छ्रीमतां सुकोमलकराङ्कितं पत्रमितः पूर्वं यथासमयं समागतमासीत्। यत्तु परिस्थितिवशादशान्तचित्ततया श्रीमदनुग्राह्येण झटिति समुत्तरितुं नाशाकि। किञ्चोपस्थितायां विपदि पर्याकुलीक्रियमाणा काश्मीरिकी हिन्दुजनता नितरां दुनोतीति नास्ति तिरोहितं श्रीमताम्। श्रीमद्भिरतीतपत्रे स्वात्मीयचित्रप्रेषणस्य प्रतिज्ञानं कृतमिति दृष्ट्वा नितरामनुग्राह्यस्यास्य स्वान्तं प्रसीदति। श्रीमदनुग्राह्येणानेन तद्विषये वाराणसेयतान्त्रिकसम्मेलनस्य सामूहिकचित्रान्तर्गतं श्रीमत्कं चित्रं ततो निर्धारयितुं व्यवस्था कृतासीत्। परमधुना श्रीमत्पत्रमाश्वासकारि संवृत्तम्। आत्मविलासाख्यो ग्रन्थः श्रीबख्शीजानकीनाथमहोदयेन नीतोऽस्ति किमसौ प्रत्यावर्तयति न वेति मानसं नूनं संशेते।

श्रीमतां ग्रन्थास्तु जनस्यास्यासवः सन्ति। इतश्च महेश्वरनाथोऽपि तदर्थं समुत्कण्ठते किञ्च ग्रन्थस्यास्य छित्राः प्रतयश्चेदुपलभ्येरन् तर्हि जनोऽयं कतिपयजनकृतकोलीनाद्विमुक्तः स्यात्। पंचस्तव्या द्वितीयो भागोऽचिरेणैव प्राकाश्यमेष्यति। श्रीमद्दिदृक्षोत्कलिकाकुलं चेतः सदावतिष्ठते। समये २ श्रीमद्भिरवश्यं जनोऽयं स्मरणादिनानुग्रहीतव्यः

इति परमादरयाति

यक्षदीनानाथः

श्रीशास्त्रिमहोदयाः!

भवतां किमपि पत्रादिकं नाद्यावधि दृष्टिपथमवतीर्णम्। न चापि श्रीमन्तः स्वा~~वक~~वकाशमाश्रम् वराकान् स्मरन्ति। इतः प्रागपि मया निवेदितमासीत् यदहं काश्मीरिकाणां चिकित्साशास्त्रप्रणेतृणां विषये नितान्तं जिज्ञासुरस्मि सत्यवसरे तेषां कानिपुरःसरं विस्तारसूचनाप्रदानेनानुग्राह्योऽयमिति प्रार्थ्यते

दीनानाथ।

यहां काट कर खोलिये To open cut here

अन्तर्देशीय पत्र
INLAND LETTER

22/9/65




Shri Amritavāgbhavacharyaji Maharaj
c/o
Dr Shri Nath Shastri Ayurvedacharya
Mulchand Khairati Ram Hospital
Lajpatnagar New Delhi
P. O. Lajpat Nagar New Delhi

First fold पहला मोड़

तीसरा मोड़ Third fold

भेजने वाले का नाम और पता :– Sender's name and address :–

22/9/65

दीनानाथ यक्ष
c/o
रिसर्च पब्लिकेशन डिपार्टमेंट
श्रीनगर लालमाडी

इस पत्र के अन्दर कुछ न रखिये NO ENCLOSURES ALLOWED